# उद्भट-सागरः

प्रथम द्वितीय तृतीय प्रवाह-समन्वित

उद्भटसागर श्रीपूर्णचन्द्र कविभूषण काव्यरत्न वि ए

सङ्कलित

( द्वितीयावृत्ति )

कलिकाता-कर्णवालिस् ष्ट्रीटस्थ
२०१ संख्यकभवनात्
श्रीयुक्त हरिदास चट्टोपाध्याय महाशय
( गुरुदास चट्टोपाध्याय एण्ड सन्स )
द्वारा
प्रकाशित ।

१८४१ शकाब्दाः ।

---

# उत्सर्ग-पत्रम् ।

वङ्गसन्तानानुरागरञ्जितहृत्पटाय
संस्कृतभाषारविन्दमधुमत्तमधुपाय

सरस्वती शास्त्रवाचस्पति सम्बुद्धागमचक्रवर्त्ति विद्यार्णवोपाधिकाय
सि एस् आइ एम ए डि एल् डि एस् सि पि एच् डि
एफ् आर् ए एस एफ् आर् एस् इ एफ् ए एस् बि
उपनामकाय माननीयधर्माधिकरणनायकाय
आचार्य्यवर्य्याय परमपूज्यपादाय
श्रीयुक्ताय

## स्यार् आशुतोष मुखोपाध्याय नाइट्

महोदयाय समुत्सृष्टोऽयं ग्रन्थ

( १ )

ाधिव्याधिविनाशकर्म्मनिपुणो गङ्गाप्रसाद पिता
वात्सल्यादिमहागुणैकवसतिर्माता जगत्तारिणी ।
पध्वंसकरश्च पुण्यजनक वासो भवानीपुर
सार्थं नाम तवाशुतोष इति च त्वत्तो महान् नापर ॥

( २ )

नानासाधिशान्त्यै वितरति सुफल य सदा प्रार्थनीयं
श्च च्छायाऽनुकम्पा बहुमसुमनसामाश्रय, सन्तत य ।
सत्तीर्थास्ति नित्य य इह सुखकरो कीर्त्तिशाखाप्रशाखा-
ाना सापमाशी स जयति नितरामाशुतोषाख्यवृक्ष ॥

# उत्सर्ग-पत्रम् ।

वङ्गसन्तानानुरागरञ्जितहृत्पटाय
संस्कृतभाषारविन्दमधुमत्तमधुपाय

सरस्वती शास्त्रवाचस्पति सम्बुद्धागमचक्रवर्त्ति विद्यार्णवोपाधिकाय
सि एस् आइ एम ए डि एल् डि एस् सि पि एच् डि
एफ् आर् ए एस् एफ् आर् एस् इ एफ ए एम् बि
उपनामकाय माननीयधर्म्माधिकरणनायकाय
आचार्य्यवर्य्याय परमपूज्यपादाय
श्रीयुक्ताय

## स्यार् आशुतोष मुखोपाध्याय नाइट्

महोदयाय समुत्सृष्टोऽयं ग्रन्थ

( १ )

आधिव्याधिविनाशकर्म्मनिपुणो गङ्गाप्रसाद पिता
वात्सल्यादिमहागुणैकवसतिर्माता जगत्तारिणी ।
पापध्वंसकरश्च पुण्यजनको वासो भवानीपुरं
सार्थं नाम तवाशुतोष इति च त्वत्तो महान् नापरः ॥

( २ )

दीनानामाधिशान्त्यै वितरति सुफलं यः सदा प्रार्थनीयं
यस्य च्छायाऽनुकम्पा बहुलसुमनसामाश्रयं सन्ततं यः ।
सुविस्तीर्णास्ति नित्यं य इह सुखकरी कीर्त्तिशाखाप्रशाखा-
सन्तानां तापनाशी स जयति नितरामाशुतोषाख्यवृक्षः ॥

( ३ )

नो मालिन्यं कदाचिद् भजति हि दिवसे ग्रस्यते केनचिद् वा
नो मेघैश्छाद्यते वा नयनसुखहरैर्दृश्यते वा कलङ्कैः ।
नो कुत्रा क्षीयते वा क्वचिदपि समये पीड्यते पीडया वा
धन्यो देवाशुतोष प्रभवति भुवि ते निर्मलः कीर्त्तिचन्द्रः ॥

( ४ )

अन्तः श्वेतां बहिः श्यामामाशुतोषमरस्वतीम् ।
दण्डिनाऽजानता प्रोक्ता 'सर्व्वशुक्ला सरस्वती' ॥

( ५ )

इन्द्रस्येव शची स्मरस्य च रतिः कात्यायनी शूलिनः
स्वाहाऽग्नेरिव केशवस्य कमला च्छायेव सूर्य्यस्य च ।
शीतांशोरिव रोहिणी च मतिमन् देवाशुतोष प्रभो
विद्या ते महती सदा फलवती त्वय्येव संरम्यते ॥

( ६ )

रत्नानामिव रत्नसानुशिखरी खं तारकाणामिव
स्वर्गः कल्पमहीरुहाणामिव सरः पङ्केरुहाणामिव ।
पाथोधिः पयसामिव प्रभवति शाब्दैः सुधीसङ्गतैः
सौजन्यादिगुणैर्भवान् सतिसतामेकाश्रयो भूतले ॥

( ७ )

दोषे कार्कशता गुणे प्रणयिता पापे परं भीरुता
सत्ये निर्भयता बुधे विनयिता चित्ते परित्यागिता ।
साधौ सादरता खले विमुखता शास्त्रेषु मर्मज्ञता
भक्तौ सत्तमता स्थिता च सततं देवाशुतोष त्वयि ॥

( ८ )

भूदेवेशाशुतोपास्यराकातारकनायक ।
विद्वन्नेत्रचकोराणा सदास्ति सुखदायक ॥

( ९ )

दारिद्र्य दुर्बलं दु स्थ पुनस्तस्यैव पीडनम् ।
आशुतोष स ते दोष' क्लीवे योज्यं न पौरुषम् ॥

( १० )

मित्राणा प्रियवर्द्धनो भव सदा नैदाघनीर यथा
शत्रूणा भयवर्द्धनो भव भृश नैदाघरौद्र यथा ।
आयुस्ते परिवर्द्धतां प्रतिदिनं नैदाघघस्रो यथा
प्रत्यूह क्षयमेतु नित्यमपि ते नैदाघरात्रिर्यथा ॥

( ११ )

अव्यायामा सुरभिसमये कामसक्ता निदाघे
रक्ता वर्षास्वभिनवजले पङ्किले पल्वलानाम् ।
कट्क्लोष्णे शरदि निरता स्वापशीला हिमर्त्तौ
शीते रात्रिभ्रमणनियतास्तेऽरय सन्तु सर्व्वे ॥

( १२ )

तृष्णार्त्तोऽस्मि कुसुमशरस चातको वारिवाहं
तारानाथ स्मरति च यथा शुष्ककण्ठश्चकोर ।
श्रान्त पान्थस्तरुवरमयो दु'खमाङ्गित्यसेवी
श्रीमन्तं त्वां स्मरति सततं पूर्णचन्द्रस्तथैव ॥

( १३ )

चन्द्रार्द्धशोभितमलाटतटाशुतोष
किं ते वदामि सुगुणान् गुणसागरस्य ।

त्वन्नामकीर्त्तिपरिकीर्त्तनयत्न एष
पादाब्जरेणुमभियात्यति पूर्णचन्द्र ॥

( १४ )

दृष्टं शिवात्सगुणितं निधिना समेतं
क्ष्माग्रावतारनिहतं वियदिन्द्रियेण ।
यत्स्फीमितं शरकारेण हृतं तदब्द
वङ्गेषु शिष्यवदनेषु तवास्तु नाम ॥

( १५ )

धर्मिसुद्गटसागरे नहि जडे कश्चिद् गुणो विद्यते
येन भ्रान्ततटान्तविश्रमवतां क्षुधानिवृत्तिर्भवेत् ।
तस्मात् स्वादुतम पवित्रममलं पीयूषपूरोपमं
गङ्गासङ्गिसरस्वतीरसमहं सम्प्रार्थये साम्प्रतम् ॥

( १६ )

अस्त्यस्मिन्नवतारणा रसनिधौ नागारसानां जना
क्षारत्वान्न पिबन्ति सागररसं देवाशुतोष प्रभो ।
क्षारश्चेत् तव वामनेत्रपतनं प्राप्नोति दैवात् तदा
स्वाकारं परिहाय देवकृपया क्षीरं भवेत् तत् पुनः ॥

( १७ )

यस्य श्री सदने गिरा च वदने चित्ते च चिन्तामणि-
र्यं स्थैर्ये तुहिनालयो निरुपमे धैर्ये च सर्वंसहा ।
यो वङ्गेषु मतः सदा सुरगुरुर्विद्यार्थिना गह्वरं
त तुच्छोद्गटसागरोऽयमतनमग्नः हि विद्यार्णवम् ।

तदीयश्रीचरणाश्रितेन
श्रीपूर्णचन्द्रेण

## मङ्गलाचरणम् ।

(१)

यो निर्म्माति बिभर्त्ति संहरति च ब्रह्मादिमूर्त्त्या जगद्
वह्निव्योमवसुन्धराम्बुपवना यस्याऽपरा मूर्त्तय ।
यो बाह्यान्तरसर्व्वदिक्षु विहरन्नेकोऽखिल वीक्षते
य सर्व्वाश्रयभूरचिन्त्यमहिमा देवाय तस्मै नम ॥

(२)

पृथ्वीपातकिपापपर्व्वतपवी पापाब्धिपारप्लवौ
पापभ्रान्तरपांशुपक्षपथिकप्राणप्रदौ पादपौ ।
पापप्राज्यपयोदपालिपवनौ पापेभपञ्चाननौ
पादौ पाशुपतौ प्रपश्य परमौ प्राक् पूर्णचन्द्र प्रगे ॥

(३)

जय जय हे शिव दर्पकदाहक दैत्यविघातक भूतपते
दशमुखनायकशायकदायक कालभयानक भक्तमते ।
त्रिभुवनकारकधारकमारक संसृतिसारक धीरमते
हरिगुणगायक ताण्डवनायक मोक्षविधायक योगरते ॥

(४)

दीर्घाक्षी दीप्तदन्ता दनुजदलदला देवतादु खदात्री
दिव्यास्त्रैर्दिव्यकान्तिर्दरदवदमना दीप्तदेहा दुकूलै ।
दृप्ताना दर्पदात्री दशदिशि दशक दृप्तदोषा दधाना
देवी दुर्गा दुरन्त दलयतु दुरित दुर्गतिद्रावदक्षा ॥

(५)

यस्या शिल्पमनल्पक त्रिभुवन काव्यञ्च वेदत्रय
यन्नाथस्त्रिपुरान्तकस्त्रिपथगा यस्या सपत्नी मता ।
या कालत्रयमोक्षितु सुविपुल धत्ते च नेत्रत्रय
सा त्रैगुण्ययुता करोतु कुशल देवी त्रिशूलायुधा ॥

( ६ )

सजलजलदकान्तं प्रेमवापीमरालम्
अभिनवघनमालं धेमवल्लीप्रवालम् ।
मुखमन्दिननान्तं दानवानां करालं
निखिलमनुजपालं नौमि तं नन्दबालम् ॥

( ७ )

पुलिनवनविहारिन् ब्रह्मवीचित्तहारिन्
दनुजदलनकारिन् योगिहृत्पद्मचारिन् ।
भवजलनिधितारिन् पीतकौशेयधारिन्
शमनदरविदारिन् पाहि मां विश्वभारिन् ॥

( ८ )

पण्डितानामरण्येऽपि मूर्खाणं नास्ति कुत्रचित् ।
इति मूर्खे परा प्रीतिर्यस्यास्तां श्रियमाश्रये ॥

( ९ )

हरिप्रिया भजे भक्त्या दीनत्व न हलिप्रियाम् ।
न भुक्तापि नरं पृथ्वीं भक्तो भुङ्क्तेव चापराम् ॥

( १० )

यो लंकेशगुरु कुमारजनको योऽसौ गवीशध्वजो
यो गङ्गां धरति स्वयं हिमकरोद्दीप्ताङ्गकान्तिः सदा ।
यो नित्यं खलु भूविशेषसदनो वामाङ्गसङ्गस्तया
भक्त्योमाधवमादिहीनमनिशं तं श्रेयसे संश्रये ॥

भगवद्दासाभिधस्य
श्रीपूर्णचन्द्रस्य ।

# अवतरणिका

## प्रथमावृत्ति ।

इह खलु भारतभूमौ प्राचीनकालादारभ्य संस्कृतभाषारविन्दमधुमत्तमधुपा बहव एषिता प्रादुरासन्। तेषु कालिदास भारवि भवभूति माघ श्रीहर्ष बाणभट्ट प्रभृतीनां प्रथितप्रचुरयशसां कवीनां मानससरोवरसमुद्भूतानि विविधरसभावमयमकरन्दपरागपूर्णानि कवितारूपकमलानि सुविकाशमासाद्य पृथिव्या सर्व्वेषां सचेतसां यथा चित्तमाकर्षन्ति, तथा निखिलसंसारनिगूढतत्त्वचिन्तने तदन्ये च कविकुलतिलका प्रसङ्गपरवशतया तत्कालोचितवक्तव्यवर्णनमुखेन यानि पद्यानि रचयामासुस्तान्युद्भटकवितेति नाम्ना सहृदयहृदयाधिष्ठानपरम्परया महार्घरत्नवदद्यापि लोके सादरं विराजन्ते। इयञ्च कविता भारतस्य क्वचित्प्रदेशे सुवचनमिति क्वचित्प्रदेशे सुभाषितमिति क्वचिच्च सूक्तमित्याख्यायते। का खलु तावदुद्भटकविता? कया रीत्या वा तस्या अन्वर्थता नामधेयस्येति निरूपयितुमीहमानैरस्माभिरिह मतद्वैधं दृश्यते। तत्र केचिदाहुः ग्रन्थविशेषसन्निवेशरहिता सामयिकनिमित्तवशान्महाजनरचिता चित्तचमत्कारिणी संस्कृतकवितैवोद्भटकवितेति, "उद्भट"शब्दस्य महाशयार्थवाचकत्वात् प्रकृष्टार्थवाचकत्वाच्च। तदुक्तमभिधानचिन्तामणौ

"महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।
महामना महात्मा च ॥

उत्पलमालायाञ्च—

"उद्भट कच्छपे सूर्य्ये प्रकृष्टे तु विलिङ्गक ।"

अन्ये तेष ब्रुवन्ति यत् काश्मीरदेशे उद्भटनामा कश्चित् कविराविरासीत्। स च उद्भटभट्ट, भट्टोद्भट, उद्भटाचार्य्येति तिसृभिराख्याभिरभिहितो बभूव। कह्लणकविविरचितराजतरङ्गिणीनामकाश्मीरदेशनृपतिगणपुरावृत्तपाठादेवमवगम्यते यत् काश्मीरदेशे कदाचित् जयापीडो नाम कश्चिन्नरपतिः एकोनाशीत्युत्तरसप्तशतीमित (७७९) खृष्टीयाब्दादारभ्य त्रयोदशाधिकाष्टशतसंख्यक (८१३) खृष्टाब्द यावत् चतुस्त्रिंशत् (३४) वत्सरान् काश्मीरराजशासनमन्वचकार। स चात्मन कवित्वशक्तिमत्तया बहून्

सुकविपण्डितान् सबहुमानमानाय्य स्वस्य सभायां समतिष्ठिपत्। तेषु च भट्टोद्भट दामोदरगुप्त, मनोरथ, शङ्खदत्त, चटक, सन्धिमान्, वामन, क्षीरदेवेत्यष्टौ महाकवयः प्रधानपदवीमध्यरुहन्। तत्राप्युद्भटकविरेव प्रधानमासीत्। स च स्वरचिताभिरत्यन्तमधुरकविताभिर्जयापीडमहाराजं सुप्रीतं विधाय तत्सकाशात् प्रतिदिनं लक्षं दीनारानलभत। एतेनैव महाकवेरुद्भटस्य महत्ता कवित्वशक्तेः कीदृक् चित्तचमत्कारित्वं तदनुमानञ्च सर्वं सुगममेव। भूपतेर्जयापीडस्य च निरतिशयकवित्वप्रियत्वात् तस्य सभा सन्मुपण्डितसमाजा बभूव। इत्थमेवाभिप्रेत्य कल्हणकवेः सूक्तमिदम्—

"समग्रहीत् तथा राजा सोऽन्विष्य निखिलान् बुधान्।
विद्वद्दुर्भिक्षमभवन् यथान्यनृपमण्डले॥"

राजतरङ्गिणी ४।४९६

जयापीडस्य राज्ञः कवेरुद्भटस्य चेतिवृत्तं प्रमाणीकर्तुं राजतरङ्गिण्याः कश्चिदंश उद्ध्रियते। यथा—

"क्षणो मूर्खोऽयमित्यस्य वाक्यैश्चिन्वन्ति स्फुटम्।
सम्यज्ञानं स्वयं चक्रे सर्व्वान् विद्याभियोगिनः॥
देशान्तरादागमय्य व्याचक्षाणान् क्षमापतिः।
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले॥
क्षीराभिधाच्छब्दविद्योपाध्यायात् सम्भृतश्रुतः।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः॥
भूपतेरात्मना स्पर्द्धा शास्त्रे न स कस्यचित्।
आश्रमन् बुधैः स्पर्द्धा प्रश्नैर्बहुमन्यत॥
तावत् पण्डितशब्दोऽभूद् राजशब्दादपि प्रथा।
तैस्तैर्येन तु स्थानि कालान्तरवदायतौ॥
नृपतौ विद्वदायत्ते राजसाम्मुख्यकाङ्क्षिभिः।
स्तब्धा बभूवुर्विदुषां व्याजात् सेवागतैर्नृप॥
अध्यक्षो भक्तशालायां मुकुन्दस्य भक्तिवा।
विदग्धया यक्रियाख्यातेन खौन्नत्य वर्द्धितः॥

विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः ।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः ॥
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम् ।
कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा ।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥”

राजतरङ्गिणी ४।४८७-४९७

“अवन्तिवर्दकालस्य यथिता पृथिवीभुजा ।
भाद्रान्त करबे श्लोका अर्थन्तेऽद्यापि सूरिभिः” ॥

राजतरङ्गिणी ४।५५०

उद्भटभट्टो हि कुमारसम्भव काव्यालङ्कारसंग्रह-भामहालङ्कारविवरणानीति ग्रन्थत्रय मरचयत्। प्रतीहारेन्दुराजो नाम कश्चित् काव्यालङ्कारसंग्रहस्य लघुवृत्तिनाम्नीं टीकां प्रणीय तत्रैवोद्भटभट्टस्य तत्तद्ग्रन्थत्रयप्रणयनवार्तां निरदिक्षत्। बुलार् साहेब महोदयेन च काश्मीरदेशे काव्यालङ्कारसंग्रहमेकमासाद्य काश्मीररिपोर्टनामकपत्रस्य ६५ संख्यकपृष्ठे एवमुक्तम् “उद्भटभट्टः किल जयापीडस्य राज्ञः सकाशात् प्रतिदिनं लक्षसंख्यकान् दीनारान् लभते स्म। स च कश्चित् कश्चिद् ग्रन्थत्रयं प्रणिनाय। तत्र स्वप्रणीते काव्यालङ्कारसंग्रहनामकेऽलङ्कारग्रन्थे यान्युदाहरणानि सन्ति तानि स्वरचितकुमारसम्भवा देवोद्धारे”ति।

पिटार् पिटार्सन् साहेबोऽपि वक्ष्यमाणपद्यचतुष्टयमुद्भटकविकृतमिति प्रतिपादयामास। तद् यथा—

( १ )

“स्निग्धे स्नेम समुद्भटेन सरसं स्वीयं मनो जायते
तुल्याऽन्यस्य समुद्भटं खलु मनः श्रोतुं पुनर्वाञ्छति ।
यस्मात् ज्ञानवतीमपि येन वशगान् कर्तुं समर्थं सुधी
कार्येदासा समुद्भटस्य मनुमैरावणक संवद ॥”

कश्चिन्न स्यात्। इयञ्च दैवी भाषा सगुणालङ्कारा सती यथा रसभावादिकं पुष्णाति काप्यन्या मानवी भाषा न तथेति।

यदाऽहं जयपुरप्रान्तमगमं तदा परमपूजनीयस्य पण्डितप्रवरस्य महामहोपाध्याय श्रीयुक्त हरप्रसाद शास्त्रि एम ए सि आइ इ महोदयस्य कनिष्ठसहोदरेण प्रमततत्त्ववित् पण्डितेन स्वर्गत मेघनाद भट्टाचार्य्य बि ए महानुभवेन सह मम सप्रेमपरिचय सञ्जात। स च मां जयपुरमहाराजस्य पुस्तकागारं नीत्वा बहूनामुद्भटकवितानां प्राचीनपुस्तकान्यदर्शयत्। समास्थितोद्भटसागरे पाठान मोगल नवाब प्रभृतीनां वर्णन सनाथा ये श्लोकाः सन्ति, तान् सर्वान् स एव मे प्रादात्। आसन् स महात्मा यद्यजीविष्यत् तदा मे महोपकारोऽभविष्यत्। किन्तु ममैव दुरदृष्टतया स इदानीं दिवं गतः।

अथैकदा माननीयो धर्म्माधिकरणिकचर, प्रात स्मरणीयो संस्कृतभाषाविशारद संस्कृतोद्भटकवितासु परानुरक्तिमान् स्यार श्रीयुक्त गुरुदास वन्द्योपाध्याय केटि एम् ए डि एल् पि एच् डि महोदयो मत्तो बहूद्भटकविता निशम्य तासां प्रशस्ति प्रसङ्गेन मामवदत्— एकैका उद्भटकविता एकैकमनर्घरत्नम्। ईदृश्य प्राच्या कविता स्वय्येव सन्तीति रत्नाकरोऽसीति। अथ तस्यैव महात्मन कतिपयैश्लामकूटविषयकै श्लोकै प्रयोजनमासीदिति तद्विषया बहुराज्यान्मनाथा कतिपये श्लोका मया तदन्तिक प्रेषिता। स चैतान् इङ्गराजीभाषयाऽनूद्य माननीयं सुपरिचितं लाग्रमाभिध राजपुरुष श्रावयित्वा परमप्रीणयत्। ततः स मामवोचत्— भद्र। एतान्यनर्घाणि भारत रत्नानि साधारणसमक्षमुपस्थाप्य विधीयतां परोपकृतिर्भवद्भ्य। आवेदानीं राजपुरुषा भवतोऽभिमतम्। अहमपि साहाय्यं ते करिष्यामि। शायन् साहिबाऽपि भवन्मदन्तान् उद्भटश्लोकानाकर्ण्य परां तुष्टिमुपागमत्।

कलिकाताराजकीयसंस्कृतविद्यामन्दिराध्यक्षो मदीयपरमहितैषी महात्मा पण्डित प्रवरो महामहोपाध्यायो डकार श्रीयुक्त सतीशचन्द्र विद्याभूषण एम् ए, पि एच् डि, एफ् ए एस् बि महोदयो मत्सकाशात् श्रुतोद्भटश्लोक परां प्रीतिमुपागतस्तेषां श्लोकानां मुद्रणाय च मां प्रोत्साहितवान्।

कितवादि पत्रिकायां ममोद्भटश्लोकानां मुद्रणकाले अहमेकदा भ्रमणार्थं कटक प्रदेशमगमम्। तत्रत्यस्य प्रधानस्य व्यवहाराजीवस्य श्रीयुक्त जानकीनाथ वसु एम् ए

डि एल् महोदयस्य साहाय्येन परमविद्यानुरागिणा स्वर्गतेन मयूरभञ्जाधिपतिना महाराज बाहादुर श्रीश्रीरामचन्द्र भञ्ज देव महोदयेन सह सङ्गमो मे समभवत्। असौ महात्मा मम उद्भटश्लोकान् श्रुणुयुरिति विज्ञाय तमहं कतिपयान् श्लोकानश्रावयम्। स च नितरां प्रीतो मुद्रासहस्रं मे प्रत्यग्रहीत्। परं ममाधन्यतया सोऽचिरादेव पञ्चत्वमुपागतः।

कलिकाता पाथुरियाघाटा वास्तव्यो महाराज स्वर्गतो महानुभावो यतीन्द्रमोहन ठाकुर संस्कृतभाषायां सुपण्डित उद्भटकवितायां परमानुरक्तश्चासीत्। हितवादि पत्रिकायाम् एडुकेशनगेजेटे च यानुद्भटश्लोकानहं प्राकाश्यं स तच्छ्रवणात्मानपठत् परां प्रीतिञ्चालभत। अथ मन्मुखाद् उद्भटकविता श्रोतुकामस्तदीय सभापण्डित नैयायिक चूडामणिं मदीयपरमहितैषिणं सुहृदं परमपूज्यपादं श्रीयुक्त पार्वतीचरण तर्कतीर्थ महोदयमनुरुद्धवान्। ततोऽहं एमारेल्ड बाओवारं गत्वा तमुद्भटश्लोकान् श्रावितवान्। तत प्रभृति स प्रतिसप्ताहमेव मन्मुखाद् उद्भटकविता शृणोति स्म। अतिविरलो हि तत्सदृश सुरसिक सुपण्डितश्च श्रोता। अहो मे दुर्दैवं यत् सोऽधुना दिवं गत इति।

उद्भटकविताकौतुकिनो मनस्विवर्य्य पण्डितप्रवरो महात्मा राय श्रीयुक्त राजेन्द्र चन्द्र शास्त्रि बाहादुर एम् ए पि आर् एस महोदय कृपयाऽतीतपञ्चविंशतिसंख्यकवत्सरेषु बहूनि नवीनानुद्भटपद्यानि सङ्गृह्य मह्यं समर्प्य च मम महोपकारमकार्षीत्। उद्भटकवितासु तस्य सहज परमनुरागो वर्त्तते। अत एव यत्र कुत्रचिदुद्भटकवितायै याच्यमानोऽप्यसौ कदाचित् पराङ्मुखो नाभूत्। पण्डिताग्रगण्येन मदीयपरमहितैषिणा उद्भटकवितानुरागिणा कलिकाता संस्कृत विद्यामन्दिरस्य अध्यक्षवरेण महामहोपाध्याय श्रीयुक्त कालीप्रसन्न भट्टाचार्य्य विद्यारत्न एम्-ए महोदयेन तथा नवद्वीपपुण्यभूमिवास्तव्येन दीपालङ्कारसनाथश्रीकर्षणसिद्धहस्तेन मदीयपरमभक्तिभाजनेन महामहोपाध्याय श्रीयुक्त शितिनाथ न्यायरत्न महानुभवेन च ममैतदुद्भटसागरस्य पाण्डुलिपि कृपया परिदृष्टा।

हितवादि सम्पादको व्यवसायप्रसङ्गकाव्यविशारद श्रीचन्द्रोदयविद्याविनोदो, बङ्गवासि स्वत्वाधिकारी स्वर्गत योगीन्द्रनाथ वसु, 'बङ्गवासि'-सम्पादक [illegible] लाल सरकार, 'एडुकेशन गेजेट' स्वत्वाधिकारी श्रीमुकुन्ददेव

बाहादुर एम् ए, बि-एल् वसुमती सम्पादकवर श्रीजलधर सेन,—एते उद्भट कवितानुरागिण सुपण्डिता सहृदया महोदया परमप्रीतिभर साग्रहमर्थ स्वस्वसंवाद पत्रेषु बहुदिनपर्यन्त मद्रचिता बहुला उद्भटकविता मुद्रितवन्त ।

एते महामहोपाध्यायाद्यो महानुभवा पण्डिता उद्भटसागरसङ्कलने साहाय्यं कुर्व्वन्तो मां नितरां प्रोत्साहितवन्त —

( १ ) काशीधामनिवासिन —स्वर्गत महामहोपाध्याय राखालदास न्यायरत्न स्वर्गत महामहोपाध्याय कैलासचन्द्र शिरोमणि, महामहोपाध्याय शिवकुमार शास्त्री महामहोपाध्याय सुब्रह्मण्य शास्त्री, स्वर्गत महामहोपाध्याय गङ्गाधर शास्त्री स्वर्गत महामहोपाध्याय दामोदर शास्त्री स्वर्गत महामहोपाध्याय गोविन्द शास्त्री, स्वर्गत महामहोपाध्याय राम मिश्र शास्त्री स्वर्गत महामहोपाध्याय सुधाकर द्विवेदी, महामहोपाध्याय विन्ध्येश्वरी प्रसाद स्वर्गत सुरेन्द्रनाथ तर्कतीर्थ श्रीवामाचरण न्यायवैशेषिकाचार्य, कविराज श्रीयुत उमाचरण कविरत्न, स्वर्गत हरकुमार शास्त्री श्रीशिवशङ्कर तर्करत्न, श्रीप्रियनाथ तत्त्वरत्न, श्रीनन्दिताचरण विद्यानिधि श्रीनारायणचन्द्र विद्यारत्न व्याकरणोपाध्याय श्रीहरिहर शास्त्री श्रीविजयकृष्ण काव्यतीर्थ वेदान्तवागीश श्रीतारापद काव्यतीर्थ साहित्योपाध्याय श्रीरमाकान्त काव्यतीर्थ स्वर्गत हरनाथ विद्यारत्न ।

( २ ) मिथिलानिवासिन —स्वर्गत विश्वनाथ ओझा स्वर्गत दीननाथ मिश्र ।

( ३ ) उत्कलनिवासिन —महामहोपाध्याय श्रीसदाशिव मिश्र स्वर्गत राय राधानाथ राय बाहादुर, जानकीनाथ वसु एम् ए बि एल् ।

( ४ ) वङ्गदेशनिवासिन —( क ) स्वर्गत महामहोपाध्याय महेशचन्द्र न्यायरत्न स्वर्गत महामहोपाध्याय चन्द्रकान्त तर्कालङ्कार स्वर्गत महामहोपाध्याय कृष्णनाथ न्यायपञ्चानन स्वर्गत महामहोपाध्याय दीनबन्धु न्यायरत्न स्वर्गत महामहोपाध्याय रामनाथ सिद्धान्तपञ्चानन स्वर्गत महामहोपाध्याय श्रीराम शिरोमणि स्वर्गत महामहोपाध्याय यदुनाथ सार्व्वभौम स्वर्गत महामहोपाध्याय राजकृष्ण तर्कपञ्चानन स्वर्गत महामहोपाध्याय द्वारकानाथ सेन स्वर्गत महामहोपाध्याय विजयरत्न सेन ।

( ख ) महामहोपाध्याय श्रीहरप्रसाद शास्त्रि एम् ए सि आइ इ महामहोपाध्याय

– , महामहोपाध्याय श्रीशिवचन्द्र सार्व्वभौम महामहोपाध्याय

तकरत्न, महामहोपाध्याय श्रीप्रमथनाथ तकभूषण महामहोपाध्याय तर्कदर्शनतीर्थ"।

स्वर्गत गिरिशचन्द्र विद्यारत्न, स्वगत नवीनचन्द्र विद्यारत्न, स्वगत हरिश्चन्द्र स्वगत गुरुनाथ काव्यतोर्थ स्वगत कृष्णकुमार विद्यारत्न स्वर्गत तारकचन्द्र स्वर्गत भगवतीचरण स्मृतितीर्थ स्वर्गत सूर्यकुमार भट्टाचार्य, स्वर्गत सेन कविराज, स्वर्गत रामचन्द्र विद्याविनोद कविराज, स्वर्गत नीलकान्त स्वगत गुरुचरण विद्याभूषण स्वगत कालीकुमार तकतीर्थ स्वगत करत्न।

श्रीपार्वतीचरण तकतीर्थ श्रीभुवनेश्वर विद्यालङ्कार, श्रीकालीपद काव्य रचन्द्र तकपञ्चानन, श्रीहरिश्चन्द्र कविरत्न श्रीदुर्गाचरण सांख्यवेदान्त जितेन्द्रनाथ विद्याभूषण श्रीयामिनीनाथ तर्कवागीश श्रीदेवेन्द्रचन्द्र विद्या हरिचरण काव्य-व्याकरणतीर्थ श्रीधीरानन्द काव्यनिधि श्रीयज्ञेश्वर श्रीगोविन्दचन्द्र विद्याभूषण श्रीरसिकमोहन विद्याभूषण कविराज भूषण राय कविरत्न एम् ए एम् वि, श्रीनिवारणचन्द्र भट्टाचार्य।

राय श्रीयतीन्द्रनाथ चौधुरि श्रीकण्ठ एम् ए वि एल् राय श्रीविनोद- वि ए, स्वगत अमृतलाल मुखोपाध्याय एम् ए वि एल् स्वगत आशुतोष ए वि एल श्रीद्वारकानाथ चक्रवर्त्ति एम् ए वि एल् श्रीगिरिशचन्द्र एम् ए, स्वगत कालीप्रसन्न घोष विद्यासागर, श्रीयुक्त आनन्दचन्द्र राय

शिरोमणिरूपया सुपण्डितसदीयपुत्र कलिकाता संस्कृतविद्यालयीय वर्त्तमानव्याकरणाध्यापको मदीयकनिष्ठसहोदरप्रतिम श्रीयुक्त मन्मथनाथ विद्यारत्नो महोदयः द्वावेतौ जेलान्तर्गतशिवपुर ग्रामस्थ पण्डितकुलतिलक परमपूजनीयो महात्मा श्रीयुक्त श्यामाचरण कविरत्न महानुभवश्च ग्रन्थस्यास्य सदन्नप्रकार्य्ये निःस्वार्थतया परमप्रीतिसहाय्य च मम यथेष्टमानुकूल्यमकुरुताम्। अतो मया प्रागुक्तानां सर्वेषां महात्मनामनिकं यावज्जीवं कृतज्ञेन भवितव्यमिति।

नानाशास्त्रसागरपारगस्य प्रातःस्मरणीयस्य परमपूज्यपादस्य सहृदयस्य श्रीयुतस्य स्यार् आशुतोष मुखोपाध्याय केटि सरस्वती शास्त्रवाचस्पति सम्बुद्धागमचक्रवर्ति विद्यापति महोदयस्य संस्कृतभाषायां निरतिशयानुरक्तिमत्तया भारतभूमिसुप्रथयाटकवितारत्नानां समुद्धरणार्थे सातिशययत्नवत्तया च तस्यैव महापुरुषस्य परमपवित्रे श्रीकरकमले उद्भटसागराख्योऽयं ग्रन्थः सभक्तिविनयं समर्प्यते

| | |
|---|---|
| भद्रकाली।<br>२४ श्रावण, जन्माष्टमी १३२४<br>बङ्गाब्दाः। ९ आगष्ट बृहस्पतिवार,<br>१९१७ खृष्टीयाब्दाः। | तदीयश्रीचरणाश्रितेन कृतज्ञेन<br>उद्भटसागरोपाधिकेन<br>श्रीपूर्णचन्द्रेण। |

## द्वितीयावृत्ति।

द्वितीयावृत्तावस्मिन्नुद्भटसागरे जोरेस् ह्विल्यान् उइल्सन् काउवेलादि विरचिता कतिपया कौतूहलोद्दीपिका अभिनवा कविता सन्निवेशिता प्रथमावृत्तौ स्खलनजाः कैचिद्द दोषाश्च यथाशक्ति संशोधिताः। शिवपुर वास्तव्यो वाराणसीस्थ सारस्वतमठ वङ्गालाध्यापक श्यामाचरण कविरत्नः काशीधामनिवासी नैयायिकप्रवरः कविकुलतिलक श्रीहरिहर शास्त्री कलिकाता संस्कृतकलेजाध्यापको वैयाकरणकेशरी श्रीमन्मथनाथ विद्यारत्नो महाशयश्च उद्भटसागरे द्वितीयावृत्तौ सविशेषं साहाय्यं विदधुः। अतश्चिरकृतज्ञता पाशेनाबद्धोऽहं तैर्महात्मभिराजीवितम्।

| | |
|---|---|
| भद्रकाली।<br>उत्तरपाड़ा पोष्ट अफिस जिला हुगली।<br>२८ अग्रहायण रविवार १३२६ बङ्गाब्दाः।<br>१४ डिसम्बर १९१९ खृष्टीयाब्दाः। | उद्भटसागरोपाधिक<br>श्रीपूर्णचन्द्र। |

# उद्भट-सागरः ।

## प्रथम-प्रवाह. ।

### विषय सूची ।

शिरोमणिस्तथा सुपण्डितस्तदीयपुत्र' कलिकाता संस्कृतविद्यालये वर्त्तमानव्याकरणाध्यापकौ मदीयकनिष्ठसहोदरप्रतिम श्रीयुक्त मन्मथनाथ विद्यारत्नौ महोदय हावड़ा जेलान्तर्गतशिवपुर वास्तव्य पण्डितकुलतिलक' परमपूजनीयौ महात्मा श्रीयुक्त श्यामाचरण कविरत्न महानुभवश्च ग्रन्थस्यास्य संशोधनकार्य्ये नितान्तमयता परमप्रीतिमत्तया च मम यथेष्टमानुकूल्यमकुरुताम्। अतो मया प्रागुक्तानां सर्व्वेषां महात्मनामन्तिके यावज्जीवं कृतज्ञेन भवितव्यमिति।

नानाशास्त्रसागरपारगस्य प्रातःस्मरणीयस्य परमपूज्यपादस्य सहृदयस्य श्रीयुतस्य स्यर आशुतोष मुखोपाध्याय कटि सरस्वती शास्त्रवाचस्पति सम्बुद्धागमचक्रवर्त्ति विद्याणव-महोदयस्य संस्कृतभाषायां निरतिशयानुरक्तिमत्तया भारतभूमिकुसुमाशोऽष्टकवितारत्नानां समुद्धरणाय सातिशययत्नवत्तया च तस्यैव महापुरुषस्य परमपवित्रे श्रीकरकमले छन्दःसागराख्योऽयं ग्रन्थः सभक्तिविनयं समर्प्यत

| भद्रकाली। | तदीयश्रीचरणाश्रितेन कृतज्ञेन |
|---|---|
| २४ श्रावण जन्माष्टमी १३२४ | छन्दःसागरोपाधिकेन |
| बङ्गाब्दा। ९ आगष्ट वृहस्पतिवार | श्रीपूर्णचन्द्रेण। |
| १९१७ खृष्टीयाब्दा। | |

## द्वितीयावृत्तिः।

द्वितीयसंस्करणेऽस्मिन् छन्दःसागरे ह्वोरेस हेमान् उइलसन् साहेबानां विरचिता कतिपया कौतूहलोद्दीपिका अभिनवा कविता सन्निवेशिता प्रथमावृत्तौ स्खलनजाः कश्चिद् दोषाश्च यथाशक्ति संशोधिताः। शिवपुर वास्तव्यौ वाराणस्येय सारदामठ वेदान्ताध्यापक श्रीश्यामाचरण कविरत्न' काशीधामनिवासी नैयायिकप्रवर कविकुलतिलक' श्रीहरिहर शास्त्री कलिकाता संस्कृतकलेजाध्यापकौ वैयाकरणकेसरी श्रीमन्मथनाथ विद्यारत्नौ महाशयश्च छन्दःसागरे द्वितीयावृत्तौ सविशेष साहाय्यं विदधुः। अतश्चिरकृतज्ञता पाशेनाबद्धोऽहं तैर्महात्मभिराजीवितम्।

| भद्रकाली। | छन्दःसागरोपाधिक |
|---|---|
| उत्तरपाड़ा पोष्ट अफिस जेला हुगली। | श्रीपूर्णचन्द्र। |
| २८ अग्रहायण, रविवार १३२६ बङ्गाब्दा। | |
| १४ डिसेम्बर, १९१९ खृष्टीयाब्दा। | |

# उद्भट-सागरः ।

## प्रथम-प्रवाह ।

## विषय सूची ।

| विषय | पत्राङ्क |
|---|---|
| मत्स्यरङ्ग | १५ |
| मयूर | १६ |
| मृग | १६ |
| वृश्चिक | १६ |
| शफरी | १७ |
| शुक | १७ |
| सर्प ( पन्नग ) | १७ |
| सिंह | १८ |
| हंस | १८ |
| उद्भित् तरङ्ग | १९ |
| सामान्य वृक्ष | १९ |
| अर्क | १९ |
| अश्वत्थ | २० |
| इक्षु | २० |
| कल्पतरु | २० |
| कार्पास | २१ |
| केतकी | २१ |
| चन्दन | २१ |
| ताल | २१ |
| दूर्वा | २२ |
| द्राक्षा | २२ |
| नारिकेल | २२ |
| निम्ब — | २३ |
| पद्मम् — | २३ |

| विषय | पत्राङ्क |
|---|---|

# उद्भट-सागर. ।

## प्रथम-प्रवाह. ।

## श्लोक-सूची ।

( अ )

| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| अखिलेषु विहङ्गेषु हन्त | ५८ |
| अगाधजलसञ्चारी विकारी | ५० |
| अधःकरोषि यद् रत्नं मूर्ध्नि | ८६ |
| अधमा धनमिच्छन्ति धनमानौ च | १५६ |
| अधो गत्वा स्वय दृष्टा च यापने | ११० |
| अपूर्व्वं एव भाण्डार भात | ७ |
| अपूर्व्वा दृश्यते व्याली खगानन | १०० |
| अयि तुरङ्ग कुरङ्गशिशो | ४१ |
| अयि व्यक्षासि कस्तूरि पामर | १५१ |
| अवगाहस्व वाग्देवि रम्य | ६ |
| अस्ति चेत् पानस बीजं | ७९ |
| अहं पिको भवान् काक | ४५ |
| अहो मोहो वराकस्य काकस्य यदसौ | ४३ |

( आ )

| | |
|---|---|
| आय व्ययश्च मध्यस्था व्ययमेव | १५० |

( उ )

| | |
|---|---|
| उच्चैस्तरोऽपि विटपी | ७२ |
| उदारस्य तृणं वित्त शूरस्य | १४४ |
| उद्घाटितनवद्वारे पञ्जरेऽस्मिन्विहङ्गम | १४८ |
| उदयन्तु शतमादित्या उदयन्तु | १२५ |
| उपभोक्तु न जानाति | ९९ |

( ए )

| | |
|---|---|
| एक एव खगो मानी चिर | ६९ |
| एकचक्रो रथो यन्ता विकलो | १२२ |